पत्तने स्थाने स्थापितः शतमन्युना ॥ 30 ॥ श्रीमालशैलप्रवरावचूलः पूर्वोतरः सत्वगुरुः सुवृत्तः ॥ प्राग्वाटवंशोस्ति बभूव तस्मिन् मुक्तोपमो वैश्रवणाभिधानः ॥ 31 ॥ तडागपत्तने येन कारितं जिनमंदिरं ॥——
भ्रांत्या यमस्ततत्वमेकत्र स्थिरतां गता ॥ 32 ॥ योचीकरच्चंद्रसुरिप्रभाणि व्याघ्रेरकादौ जिनमंदिराणि ॥ कीर्त्तिद्रुमारामसमृद्धिहेतोर्विभाति कंदा इव यान्यमंदाः ॥ 33 ॥ कल्लोलमांसलितकीर्त्तिसुधासमुद्रः सद्बुद्धिवंधुरवधूधरणीधरेशः ॥ वीरोपकारकरणप्रगुणांतरात्मा श्रीचच्चुलस्तुतनयः........पदेऽभूत् ॥ 34 ॥ शुभंकरशतस्यसुतोजनिष्ट शिष्टैर्महिष्टैः परिकीर्त्यकीर्तिः ॥ श्रीजासटोसूत तदंगजन्मा यदंगजन्मा खलुपुण्यराशिः ॥35॥ मंदिरं वर्द्धमानस्य श्रीनाराणकसंस्थितं ॥ भाति यत्कारितं स्वीयपुण्यस्कंधमिवोज्वलम् ॥ 36 ॥ चत्वारश्चतुराचाराः पुत्राः पात्रं शुभश्रियः ॥ अमुण्यामुण्यधर्माणो वभूवुर्भार्ययोर्द्वयोः ॥ 37 ॥ एकस्यां द्वावजायेतां श्रीमदाम्बटपद्मटौ अपरस्या (मजायेतां सुतौ) लक्ष्मटदेसलौ ॥ 38 ॥ पाकाणां नरवरे वीरवेश्मकारणपाटवं ॥ प्रकटितं स्वीयवित्तेन धातुनैव महीतलं ॥ 39 ॥ पुत्रौ पवित्रौ गुणरत्नपात्रौ विशुद्धगात्रौ समशीलसत्वौ ॥ वभूवतुर्लक्ष्मटकस्य जैत्रौ मुनिंदुगमेंद्वभिधौ यशस्त्रौ ॥ 40 ॥ षट्षण्डागमबद्धसौहृदभराः षड्जीवरक्षाकराः षड्भेदेंद्रियवश्यतापरिकराः षट्कर्मक्लृप्तादराः षट्षंडावनिकीर्त्तिपालनपराः षाड्गुण्यचिंताकराः ॥ षड्दृष्ट्यंबुजभास्कराः समभवन् षड्देशलस्यांगजाः ॥ 41 ॥ श्रेष्टीदुद्दकनायकः प्रथमकः श्रीगोसलोवागजिद्देवस्पर्श इतोऽपि सीयकवरः श्रीराहको नामतः ॥ एते तु क्रमतो जिनक्रमयुगा भौजैकश्रृङ्गोपमा मान्या राजशतैर्वदान्यगतयो राजंति जंतूत्सवाः ॥ 42 ॥ हर्म्यं श्रीवर्द्धमानस्याजयमेरोर्विभूषणं ॥ कारितं यैर्महाभागैर्विमानमिव नाकिनां ॥ 43 ॥ तेषामंतः श्रियः पात्रं सोयकश्रेष्टिभूषणं ॥ मंडलकरं महादुर्गं भूषयामास भूतिना ॥ 44 ॥ योन्यायांकुरसेचनैकजलदः कीर्तेर्निधानं परं सौजन्यांवुजिनीविकासनरविः पापाद्रिभेदे पविः ॥ कारुण्यामृतवारिधिविलसने राकाशशांकोपमो नित्यंसाधुजनोपकारकरणव्यापारबद्धादरः ॥ 45 ॥ येनाकारि जिताग्निनेमिभवनं देवाद्रिशृंगोद्धुरं चंचत्कांचनचारुदंडकलशश्रेणिप्रभाभास्वरं ॥ खेलत्खेचरसुन्दरीश्रमभरं भंजवद्ध्वजोद्वीजनैर्धत्तेष्टापदशैलश्रृंगजिनभृत् प्रोद्दामसद्मश्रियं ॥ 46 ॥ श्रीसीयकस्य भार्ये स्तो नाग श्रीमामटाभिधे ॥ आद्यायाम्युस्त्रयः पुत्रा द्वितीयाया सुतद्वयम् ॥ 47 ॥ पंचाचारपरायणात्ममतयः पंचांगमंत्रोज्वलाः पंचज्ञानविचारणाः सुचतुराः पंचेन्द्रियार्थोज्जयाः ॥ श्रीमत्पंच-

ख्यातपदार्थदानचतुरश्चिंतामणेः सोदरः ।। सोभूच्छ्रीजिनचंद्रसूरिसुगुरुस्तत्पादपंके-रुहे योभृंगायतपत्रलोलकवरस्तीर्थं चकारैप सः ।। 83 ।। रेवत्या सरितस्तटे तरुवरायत्राव्हयंते मृशं शाखा बाहुलतोत्करैर्नरसुरान् पुंस्कोकिलानां रुतैः ।। मत्पुष्पोच्चयपत्रसत्फलचयै रानिर्मलैर्वारिभिर्भोभोम्यर्चयताभिषेक यत वा श्रीपार्श्वनाथं प्रभुं ।। 84 ।। यावत्पुष्करतीर्थसैकतकुलं यावच्च गंगाजल यावत्तारक चंद्रभास्करकरा यावच्च दिक् कुंजराः ।। यावच्छ्रीजिनचंद्रशासन-मिदंयावन्महेंद्रं पदं तावत्तिष्ठतु सत् प्रशस्तिसहितं जैनं स्थिरं मंदिरं ।। 85 ।। पूर्वतो रेवतीसिन्धुर्देवस्यापि पुरं तथा ।। दक्षिणस्यां मठस्थानमुदीच्यां कुण्ड-मुत्तमं ।। 86 ।। दक्षिणोत्तरतोवाटी नानावृक्षैरलंकृता ।। कारितं लोलिकेनै-तत् सप्तायतनसंयुतं ।। 87 ।। श्रीमन्म—रसिंहोभूद्गुणभद्रो महामुनिः ।। कृता प्रशस्ति रेषा च कविकंठविभूषणा ।। 88 ।। नैगमान्वयकायस्थ छीत्तिगस्य च सूनुना ।। लिखिता केशवेनेयं मुक्ताफलमिवोज्वला ।। 89 ।। हरसिगसूत्रधारोथ तत्पुत्रो पाल्हणो भुवि ।। तदंगजेमाहडेनापि निर्मितं जिनमंदिरं ।। 90 ।। नानिगपुत्रगोविन्द पाल्हणसुतदेल्हणौ उत्कीर्णा प्रशस्तिरेषा च कीर्तिस्तंभं प्रतिष्ठितं ।। 91 ।। प्रसिद्धिमगवद्देव काले विक्रमभास्वतः शड्विशद्वादशशते फाल्गुने कृष्णपक्षके ।। 92 ।। तृतीयायां तिथौ वारे गुरौ तारे च हस्तके ।। धृतिनामनि योगे च करणे तैतले तथा ।। 93 ।। संवत् 1226 फाल्गुनवदि 3[1]

कांवारेणग्रामयोरंतराले गुहिलपुत्रराο दाम्वरमहंघणसिंहाभ्यां दत्त क्षेत्र डोहली 1 खडुंवराग्रामवास्तव्यगौडसोनिग वासुदेवाभ्यां दत्तडोहलिका 1 आंतरी ग्राप्रतिगणकेरायतागामीयमहंतमलीं वडियोपलिभ्यां दत्तक्षेत्र डोहलिका 1 बडोवाग्राम वास्तव्यपारिग्रहीग्राल्हणेन दत्त क्षेत्र डोहलिका 1 लघुविकौली-ग्रामसं-गुहिलपुत्रराο शाहरूमहत्तममाहवाभ्यां दत्त क्षेत्र डोहलिका 1 बहुभिर्व-सुधा भुक्ता राजभिर्भरतादिभिः ।। यस्य यस्य भूमी तस्य तस्य तदा फलम् ।। 1 ।।

1. गुरुवार, फरवरी 5, 1170 ई०. (सं०)

——

मृत्युर्न वा रोगा न दुर्भिक्षमवर्षणम् ।। यत्र देव प्रभावेण कलिपकप्रधर्षणम् ।। 67 ।। षण्मासे जायते यत्र शिवलिंगं स्वयंभुव ।। तत्र कोटिश्वरेतीर्थे का श्लाघा क्रियते मया ।। 68 ।। इत्येवंज..................कृत्त्वावतारक्रिया ।। कर्त्ता पार्श्वजिनेश्वरोऽत्र कृपया सोत्पाद्य वासः पतेः शक्तेर्वैक्रियकश्रियस्त्रिभुवन-प्राणिप्रवोधं प्रभुः ।। 69 ।। इत्याकर्ण्य वचोविभाव्य मनसा तस्योरगः स्वामिनः सः प्रातः प्रतिवुध्य पार्श्वमभितः क्षोणीं विदार्य क्षणात्तावत्तत्र विभुं ददर्श सहसा निःप्राकृताकारिणं कुंडाभ्यर्णतपोवधानदधतं स्वायंभुवः श्रीश्रितं ।। 70 ।। नासीद्यत्र जिनेंद्रपादनमनं नो धर्मकर्मार्जनं न स्नानं न विलेपनं न च तपोध्यानं न दानार्चनं ।। नो वा सन्मुनिदर्शनं...................... ।। 71 ।। तत्कुंड मध्यादथ निर्ज्जगाम श्रीसीयकस्यागमनेन पद्मा ।। श्रीक्षेत्रपालस्तद-थांम्बिका च श्रीज्वालिनी श्रीधरणोरगेशः ।। 72 ।। यदावतारमाकार्षीदत्र पार्श्वजिनेश्वरः ।। तदानागह्लदे यक्षगिरिस्तत्र पपात सः ।। 73 ।। यक्षोपि दत्तवान् स्वप्नं लक्ष्मणब्रह्मचारिणः ।। तत्राहमपि यास्यामि यत्र पार्श्वविभुर्मम ।। 74 ।। रेवतीकुण्डनीरेण या नारी स्नानमाचरेत् ।। सा पुत्रभर्तृसौभाग्यं लक्ष्मीं च लभते स्थिरां ।। 75 ।। ब्राह्मणः क्षत्रियो वापि वश्यो वा शूद्र एव च ।। अंत्यजो वापि स्वर्गं च संप्राप्नोत्युत्तमां गतिं ।। 76 ।। धनं धान्यं धरां धर्मं धैर्यं धौरेयतां धियं ।। धराधिपतिसन्मानं लक्ष्मीं चाप्नोति पुष्कलाम् ।। 77 ।। तीर्थाश्चर्यमिदं जनेन विदितं यन्दीयते सांप्रतं कुष्टप्रेतपिशाचकुज्वर-रुजा हीनांगगंडापहं ।। सन्न्यासं च चकार निर्गतभयं घूकश्रृगालीद्वयं काकीना-कमवाप देवकलया किं किं न संपद्यते ।। 78 ।। श्लाघ्यं जन्मकृतं धनं च सफलं नीता प्रसिद्धिमतिः मद्धर्मोपि च दर्शितस्तनुरुहस्वप्नोपितः सत्यतां ।। ..........................परदृष्टिदूपितमनाः सद्दृष्टिमार्गे कृतो जैन....... ........ तमाश्रीलोलकः श्रेष्टिनः ।। 79 ।। किंमेरो श्रृंगमेतत् किमुत हिमगिरेः कूटकोटिप्रकाण्ड किं वा कैलासकूटं किमथ सुरपतेः स्वर्विमानं ।। इत्थं यत्तर्क्य-नेम्म प्रतिदिनममरैर्मर्त्यराजोत्करैर्वा मन्ये श्रीलोलकस्य त्रिभुवनभरणा-दुच्छ्रितं कीर्तिपुंजम् ।। 80 ।। पवनसुतपताका पाणितो भव्यमुख्यान् पटुपटहनिनादादाह्वयत्येपजैन. ।। कलिकलुपमथोच्चैर्दूरमुत्सारयेद्वा त्रिभुवन-विभु—भानृत्यतीवालयोयं ।। 81 ।। ———स्थानकमाधरंति दधते काश्चिच्च गीतोत्सवं काश्चिद्विप्रतितालवंशललितं कुर्वंति नृत्यं च काः ।। काश्चिद्वाद्यमुपा-नयन्ति निभृतं वीणास्वरं काश्चन यः प्रौच्चैर्ध्वजकिंकिणीयुवतयः केपां मुदेना-भवत् ।। 82 ।। यः सद्वृत्तयुतः सुदीप्तिकलितस्त्रासादिदोपो ज्झितश्रिता-

